गह्वरं गण्डशैलास्तु च्युताः स्थूलोपला गिरेः ६४५
'दन्तकास्तु बहिस्तिर्यक्प्रदेशान्निर्गता गिरेः **
खनिः स्त्रियामाकरः स्यात् पादाः प्रत्यन्तपर्वताः ६४६
उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका ६४७
धातुर्मनःशिलाद्यद्रेर्गैरिकं तु विशेषतः ६४८
निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे ६४९

## ५. वनौषधिवर्गः

अटव्यरण्यं विपिनं गहनं काननं वनम् ६५०
महारण्यमरण्यानी गृहारामास्तु निष्कुटाः ६५१
आरामः स्यादुपवनं कृत्रिमं वनमेव यत् ६५२
अमात्यगणिकागेहोपवने वृक्षवाटिका ६५३
पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम् ६५४

---

—गुहा, गह्वरम्, इति २ **देवखाते** अकृत्रिमे **बिले** बिलविषये ॥—गिरेः, सकाशाच्च्युताः, पतिता ये स्थूलपाषाणास्ते **गण्डशैला** इत्युच्यन्ते ॥—खनिः, आकरः, इति २ **रत्नाद्युत्पत्तिस्थानस्य** ॥—पादाः, प्रत्यन्तपर्वताः, इति २ **पर्वतसमीपस्थाल्पपर्वतानाम्** ॥—अद्रेरधः संनिहिता भूमि**रुपत्यके**त्युच्यते ॥—अद्रेरूर्ध्वा या भूमिः सा**ऽधित्यका** इति ॥—अद्रेर्यन्मनःशिलादि स **धातु**रित्युच्यते । आदिना हरितालस्वर्णताम्रादिग्रहः । **गैरिकं** विशेषतो धातुः ॥—निकुञ्जः, कुञ्जः, इति २ **लतादिपिहितोदरे** लताद्याच्छादितगर्भे **स्थाने** ॥

६५०-९८९. अटवी, अरण्यम्, विपिनम्, गहनम्, काननम्, वनम्, इति ६ **अरण्यस्य** । तत्राटवी स्त्रियाम्, ॥—महारण्यम्, अरण्यानी, इति २ **महतो वनस्य** । अरण्यानी स्त्रियाम् ॥—गृहारामाः, निष्कुटाः, इति २ **गृहसमीपकृत्रिमवनेषु** ॥—यत् **कृत्रिमं** कृत्या निर्वृत्तं **वनं** तत्र आरामः, उपवनम्, **वृक्षवाटिकेति** १ अमात्यानां वेश्यानां च यद्गृहोपवनं तत्र ॥—यत् **राज्ञः साधारणं** प्रमदाभिरन्यैर्वा सह क्रीडाद्यर्थं **वनं** तत्र आक्रीडः, उद्यानम्, इति २ ॥—

स्यादेतदेव प्रमदवनमन्तःपुरोचितम् ६५५
वीथ्यालिरावलिः पङ्क्तिः श्रेणी लेखास्तु राजयः ६५६
वन्या वनसमूहे स्यादङ्कुरोऽभिनवोद्भिदि ६५७
वृक्षो महीरुहः शाखी विटपी पादपस्तरुः ६५८
अनोकहः कुटः शालः पलाशी द्रुद्रुमागमाः ६५९
वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः ६६०
ओषध्यः फलपाकान्ताः स्युरवन्ध्यः फलेग्रहिः ६६१
वन्ध्योऽफलोऽवकेशी च फलवान् फलिनः फली ६६२
प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः ६६३
फुल्लश्चैते विकसिते स्युरवन्ध्यादयस्त्रिषु ६६४
स्थाणुर्वा ना ध्रुवः शङ्कुर्ह्रस्वशाखाशिफः क्षुपः ६६५
अप्रकाण्डे स्तम्बगुल्मौ वल्ली तु व्रततिर्लता ६६६

अत उद्यानं अन्तःपुरोचितं राज्ञीनामेव क्रीडायामुचितं चेत् **प्रमदवनं** स्यात् ॥—वीथी, आलिः, आवलिः, पङ्क्ति, श्रेणी, इति ५ **पङ्क्तेः** ॥—लेखाः, राजयः, इति २ **लेखानाम्** ॥—वनानां समूहे **वन्येति** १ ॥ अभिनवोद्भिदि नूतनप्ररोहे **अङ्कुर** इत्येकम् ॥—वृक्षः, महीरुहः, शाखी, विटपी, पादपः, तरुः, अनोकहः, कुटः, शालः, पलाशी, द्रुः, द्रुमः, अगमः, इति १३ **वृक्षस्य** । पुष्पाज्जातैः फलैरुपलक्षितो वृक्षो **वानस्पत्यः** आम्रादेः । अपुष्पात् पुष्पं विना जातैः फलैरुपलक्षितो वृक्षो **वनस्पतिः** एकं पनसोदुम्बरादेः । फलपाक एवान्तो यासां ता **ओषध्यः** स्युः, एकं व्रीहियवादेः ॥—अवन्ध्यः, फलेग्रहिः, इति २ **यथाकालं फलधरस्य** ॥ वन्ध्यः, अफलः, अवकेशी, इति ३ **ऋतावपि फलरहितस्य** ॥—फलवान्, फलिनः, फली, इति ३ **सफलस्य** । फलिनोऽदन्तः ॥—प्रफुल्लः, उत्फुल्लः, संफुल्लः, व्याकोशः, विकचः, स्फुटः, फुल्लः, इति ७ **विकसिते पुष्पिते** स्युः । अवन्ध्यादयः अवन्ध्यः, अफल इत्यादयो विकसितान्ताः त्रिषु त्रिलिङ्ग्यां स्युः ॥—स्थाणुः, ध्रुवः, शङ्कुः, इति ३ **छिन्नविटपस्य** । प्रकाण्डे वा ना, स्थाणुशब्दो विकल्पेन पुंसीत्यर्थः ॥—शाखा प्रसिद्धा । शिफा वृक्षमूलम् । ह्रस्वे शाखाशिफे यस्य स **क्षुप** इत्युच्यते ॥—न विद्यते **प्रकाण्डो** यस्य तस्मिन् स्तम्बः, गुल्मः,

लता प्रतानिनी वीरुद्गुल्मिन्युलप इत्यपि ६६७
नगाद्यारोह उच्छ्राय उत्सेधश्चोच्छ्रयश्च सः ६६८
अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः ६६९
समे शाखालते स्कन्धशाखाशाले शिफाजटे ६७०
शाखाशिफाऽवरोहः स्यान्मूलाच्चाग्रं गता लता ६७१
शिरोऽग्रं शिखरं वा ना मूलं बुध्नोऽङ्घ्रिनामकः ६७२
सारो मज्जा नरि त्वक् स्त्री वल्कं वल्कलमस्त्रियाम् ६७३
काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित्स्त्रियाम् ६७४
निष्कुहः कोटरं वा ना वल्लरिर्मञ्जरिः स्त्रियौ ६७५
पत्रं पलाशं छदनं दलं पर्णं छदः पुमान् ६७६

---

इति २ ॥—वल्ली, व्रततिः, लता, इति ३ **लतायाः** ॥—वीरुत्, गुल्मिनी, उलपः, इति ३ **या प्रतानिनी शाखादिभिर्विस्तृता लता तत्रेत्यर्थः** । तत्र वीरुत् धान्तः ॥ नगाद्यारोहो **वृक्षादीनामुच्चत्वं** तत्र उच्छ्रायः, उत्सेधः, उच्छ्रयः, इति ३ ॥—प्रकाण्डः, स्कन्धः, इति २ **तरोर्मूलमारभ्य शाखापर्यन्तो यो भागस्तत्र** ॥—शाखा, लता, इति २ **शाखायाः** ॥ स्कन्धशाखा, शाला, इति २ **प्रधानशाखायाः** ॥ शिफा, जटा, इति २ **तरुमूलस्य** ॥—शिखायाः शिफा मूलं **अवरोह** इत्युच्यते । मूलाद्वृक्षमूलमारभ्याग्रपर्यन्तं गता लता गुडूच्यादिरपि **अवरोह** इत्युच्यते। शिरसोऽग्रं शिरोऽग्रं तत् **शिखरमित्युच्यते**॥—मूलम्, बुध्नः, अङ्घ्रिनामकः, इति ३ **वृक्षादेर्मूलस्य** ॥ सारः, मज्जा, इति २ **वृक्षादेः स्थिरांशे** । तत्र मज्जा नान्तः । नरि पुंसि ॥ त्वक्, वल्कम्, वल्कलम्, इति ३ **त्वचः** । तत्र वल्कादिद्वयं क्लीबपुंसोः ॥—काष्ठम्, दारु, इति २ **काष्ठमात्रस्य** ॥—इन्धनम्, एधः, इध्मम्, एधः, समित्, इति ५ **शुष्कस्य तृणकाष्ठादेः** । तत्र आद्य 'एधः'शब्दः सान्तः क्लीबे । अन्यस्त्वदन्तः पुंसि । समित् धान्तः स्त्रियाम् ॥—निष्कुहः, कोटरम्, इति **वृक्षगतविवरस्य** । कोटरं वा ना पक्षे पुमान् ॥—वल्लरिः, मञ्जरिः, इति २ **तुलस्यादेरभिनवोद्भिदि** ॥—पत्रम्, पलाशम्, छदनम्, दलम्, पर्णम्, छदः, इति ६ **पत्रस्य** ।

**पल्लवोऽस्त्री किसलयं विस्तारो विटपोऽस्त्रियाम्** ६७७
**वृक्षादीनां फलं सस्यं वृन्तं प्रसवबन्धनम्** ६७८
**आमे फले शलाटुः स्याच्छुष्के वानमुभे त्रिषु** ६७९
**क्षारको जालकं क्लीबे कलिका कोरकः पुमान्** ६८०
**स्याद्गुच्छकस्तु स्तबकः कुड्मलो मुकुलोऽस्त्रियाम्** ६८१
**स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्** ६८२
**मकरन्दः पुष्परसः परागः सुमनोरजः** ६८३
**द्विहीनं प्रसवे सर्वं हरीतक्यादयः स्त्रियाम्** ६८४
**आश्वत्थवैणवप्लाक्षनैयग्रोधैङ्गुदं फले** ६८५
**बार्हतं च फले जम्ब्वा जम्बूः स्त्री जम्बु जाम्बवम्** ६८६

---

तत्र छदोऽदन्तः पुंसि ॥—पल्लवः, किसलयम्, इति २ **पत्रादियुक्ते शाखायाः पर्वणि** । तत्र किसलयं पुंसि क्लीबे च ॥—विस्तारः शाखापल्लवसमुदाय-लक्षण आभोगः **विटप** उच्यते ॥—वृक्षादीनां फलं **सस्य**मित्युच्यते । प्रसवः पुष्पादिः बध्यते येन तत् **वृन्त**मु यते । आमेऽपक्के फले **शलाटु**रिति १ । शुष्के फले **वान**मिति १ । उभे शलाटुर्वानं च त्रिषु त्रिलिङ्ग्याम् ॥ क्षारकः, जाल-कम्, इति २ **नूतनकलिकायाः** । तत्र जालकं क्लीबे एव ॥—कलिका, कोरकः, इति २ **अस्फुटितपुष्पस्य** ॥—गुच्छकः, स्तबकः, इति २ **कलिकादिभि-राकीर्णस्य पल्लवग्रन्थेः** । पुष्पादिस्तबके **गुच्छ** इति ॥—कुड्मलः, मुकुलः, इति २ **ईषद्विकसितकलिकायाम्** ॥—सुमनसः, पुष्पम्, प्रसूनम्, कुसुमम्, सुमम्, इति ५ **पुष्पस्य** ॥—मकरन्दः, पुष्परसः, इति २ **पुष्पमधुनि** ॥—परागः, सुमनोरजः, इति २ **पुष्परेणोः** । अश्वत्थकपित्थादीनामभिधानं प्रसवे पुष्पे फले मूले च वर्तमानं तत् **द्विहीनं** ज्ञेयम् । हरीतक्याः फलं **हरीतकी** । आदिना कोशातकी, कर्कटी, द्राक्षेत्यादि । अश्वत्थस्य फलं **आश्वत्थम्** । वेणोः फलं **वैणवम्** । प्लक्षस्य फलं **प्लाक्षम्** । न्यग्रोधस्य फलं **नैयग्रोधम्** । इङ्गुद्याः फलं **ऐङ्गुदम्** । बृहत्याः फलं **बार्हतम्** ॥—जम्बूः, जम्बु, जाम्बवम्, इति ३ **जम्ब्वाः फले** । जम्बूः स्त्री ॥—जातीयूथिकामल्लिकेत्यादयः पुष्पे वर्तमानाः

पुष्पे जातीप्रभृतयः स्वलिङ्गा व्रीहयः फले ६८७
विदार्याद्यास्तु मूलेऽपि पुष्पे क्लीबेऽपि पाटला ६८८
बोधिद्रुमश्चलदलः पिप्पलः कुञ्जराशनः ६८९
अश्वत्थेऽथ कपित्थे स्युर्दधित्थग्राहिमन्मथाः ६९०
तस्मिन्दधिफलः पुष्पफलदन्तशठावपि ६९१
उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः ६९२
कोविदारे चमरिकः कुद्दालो युगपत्रकः ६९३
सप्तपर्णो विशालत्वक् शारदो विषमच्छदः ६९४
आरग्वधे राजवृक्षशम्पाकचतुरङ्गुलाः ६९५
आरेवतव्याधिघातकृतमालसुवर्णकाः ६९६
स्युर्जम्बीरे दन्तशठजम्भजम्भीरजम्भलाः ६९७
वरुणो वरणः सेतुस्तिक्तशाकः कुमारकः ६९८
पुंनागे पुरुषस्तुङ्गः केसरो देववल्लभः ६९९
पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः ७००

---

स्वलिङ्गा एव स्युः, न तु क्लीबे। व्रीहयः फले स्वलिङ्गाः। विदारी बृहत्यंशुमती-त्याद्या मूलेऽपि स्वलिङ्गाः। 'अपि'शब्दात् पुष्पेऽपि स्वलिङ्गाः, पाटला पुष्पे वर्तमाना क्लीबे ॥—बोधिद्रुमः, चलदलः, पिप्पलः, कुञ्जराशनः, अश्वत्थः, इति ५ **पिप्पलवृक्षस्य** ॥—कपित्थः, दधित्थः, ग्राही, मन्मथः, दधिफलः, पुष्पफलः, दन्तशठः, इति ७ **कपित्थस्य**[1] ॥—उदुम्बरः, जन्तुफलः, यज्ञाङ्गः, हेमदुग्धकः, इति ४ **उदुम्बरस्य**[2] ॥—कोविदारः, चमरिकः, कुद्दालः, युगपत्रकः, इति ४ **कोविदारस्य**[3] ॥—सप्तपर्णः, विशालत्वक्, शारदः, विषमच्छदः, इति ४ **सप्तपर्णस्य**[4] ॥ आरग्वधः, राजवृक्षः, शम्पाकः, चतुरङ्गुलः, आरेवतः व्याधिघातः, कृतमालः, सुवर्णकः, इति ८ **कृतमालस्य**[5] ॥—जम्बीरः, दन्तशठः, जम्भः, जम्भीरः, जम्भलः, इति ५ **जम्बीरस्य**[6] ॥ वरुणः, वरणः, सेतुः, तिक्तशाकः, कुमारकः, इति ५ **वरणस्य**[7] ॥—पुंनागः, पुरुषः, तुङ्गः, केसरः, देववल्लभः, इति ५ **पुंनागस्य**[8] ॥—पारिभद्रः, निम्बतरुः, मन्दारः, पारिजातकः,

---

१ कवठ. २ उंबर. ३ कांचन. ४ सांतवण. ५ बाहवा. ६ लघु इडनिंबू. ७ वायवर्णा. ८ उंडली.

तिनिशे स्यन्दनो नेमी रथद्रुरतिमुक्तकः ७०१
वञ्जुलश्चित्रकृच्चाथ द्वौ पीतनकपीतनौ ७०२
आम्रातके मधूके तु गुडपुष्पमधुद्रुमौ ७०३
वानप्रस्थमधुष्ठीलौ जलजेऽत्र मधूलकः ७०४
पीलौ गुडफलः स्रंसी तस्मिंस्तु गिरिसंभवे ७०५
अक्षोटकन्दरालौ द्वावङ्कोटे तु निकोचकः ७०६
पलाशे किंशुकः पर्णो वातपोथोऽथ वेतसे ७०७
रथाभ्रपुष्पविदुरशीतवानीरवञ्जुलाः ७०८
द्वौ परिव्याधविदुलौ नादेयी चाम्बुवेतसे ७०९
शोभाञ्जने शिग्रुतीक्ष्णगन्धकाक्षीवमोचकाः ७१०
रक्तोऽसौ मधुशिग्रुः स्यादरिष्टः फेनिलः समौ ७११
बिल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपि ७१२
प्लक्षो जटी पर्कटी स्यान्न्यग्रोधो बहुपाद्वटः ७१३

---

इति ४ **निम्बतरोः**[1] ॥—तिनिशः, स्यन्दनः, नेमी, रथद्रुः, अतिमुक्तकः, वञ्जुलः, चित्रकृत्, इति ७ **तिनिशस्य**[2] ॥ पीतनः, कपीतनः, आम्रातकः, इति ३ **आम्रातकस्य**[3] ॥—मधूकः, गुडपुष्पः, मधुद्रुमः, वानप्रस्थः, मधुष्ठीलः, इति ५ **मधूकस्य**[4] ॥ जलजेऽत्र मधूके **मधूलक**[5] इति १ ॥—पीलुः, गुडफलः, स्रंसी, इति ३ **पीलुवृक्षस्य**[6] ॥ अक्षोटः, कन्दरालः, इति २ **पर्वतपीलोः**[7] ॥—अङ्कोटः, निकोचकः, इति २ **अङ्कोटस्य**[8] ॥ पलाशः, किंशुकः, पर्णः, वातपोथः, इति ४ **पलाशस्य**[9] ॥—वेतसः, रथः, अभ्रपुष्पः, विदुरः, शीतः, वानीरः, वञ्जलः, इति ७ **वेतसस्य**[10] ॥—परिव्याधः, विदुलः, नादेयी, अम्बुवेतसः, इति ४ **जलवेतसस्य** । नादेयी स्त्री ॥—शोभाञ्जनः, शिग्रुः, तीक्ष्णगन्धकः, अक्षीवः, मोचकः, इति ५ **शिग्रोः**[11] ॥—असौ शोभाञ्जनो रक्तो रक्तपुष्पश्चेत **मधुशिग्रु**रित्युच्यते ॥—अरिष्टः, फेनिलः, इति २ **अरिष्टस्य**[12] ॥—बिल्वः, शाण्डिल्यः, शैलूषः, मालूरः, श्रीफलः, इति ५ **बिल्वस्य**[13] ॥—प्लक्षः, जटी, पर्कटी, इति ३ **प्लक्षस्य**[14] ॥ न्यग्रोधः, बहुपात्, वटः, इति ३ **वटस्य**[15] ॥

---

१ कडुनिंब. २ तिवस. ३ अंबाडा. ४ मोहा. ५ लांबपानी मोहा. ६ अक्रोड. ७ डोंगरी अक्रोड. ८ पिस्ते. ९ फळस. १० वेत. ११ शेवगा, शेगट. १२ रिठा. १३ बेल. १४ पिंपरी. १५ वड.

गालवः शाबरो लोध्रस्तिरीटस्तिल्वमार्जनौ ७१४
आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः ७१५
कुम्भोलूखलकं क्लीबे कौशिको गुग्गुलुः पुरः ७१६
शेलुः श्लेष्मातकः शीत उद्दालो बहुवारकः ७१७
राजादनं प्रियालः स्यात् सन्नकद्रुर्धनुःपटः ७१८
गम्भारी सर्वतोभद्रा काश्मरी मधुपर्णिका ७१९
श्रीपर्णी भद्रपर्णी च काश्मर्यश्चाप्यथ द्वयोः ७२०
कर्कन्धूर्बदरी कोलिः कोलं कुवलफेनिले ७२१
सौवीरं बदरं घोण्टाऽप्यथ स्यात् स्वादुकण्टकः ७२२
विकङ्कतः स्रुवावृक्षो ग्रन्थिलो व्याघ्रपादपि ७२३
ऐरावतो नागरङ्गो नादेयी भूमिजम्बुका ७२४
तिन्दुकः स्फूर्जकः कालस्कन्धश्च शितिसारके ७२५
काकेन्दुः कुलकः काकतिन्दुकः काकपीलुके ७२६

—गालवः, शाबरः, लोध्रः, तिरीटः, तिल्वः, मार्जनः, इति ६ **लोध्रस्य** ॥—आम्रः, चूतः, रसालः, इति ३ **आम्रस्य**। असौ आम्रोऽतिसौरभश्चेत् **सहकार** इति १ ॥—कुम्भः, उलूखलकम्, कौशिकः, गुग्गुलुः, पुरः, इति ५ **गुग्गुलुवृक्षस्य** ॥ शेलुः, श्लेष्मातकः, शीतः, उद्दालः, बहुवारकः, इति ५ **उद्दालकस्य**[1] ॥ राजादनम्, प्रियालः, सन्नकद्रुः, धनुःपटः, इति ४ **प्रियालस्य**[2]। धनुः पटः इति व्यस्तमपि ॥—गम्भारी, सर्वतोभद्रा, काश्मरी, मधुपर्णिका, श्रीपर्णी, भद्रपर्णी, काश्मर्यः, इति ७ **काश्मर्याः**[3] ॥—कर्कन्धूः, बदरी, कोलिः, इति ३ **बदर्याः**[4] ॥ कोलम्, कुवलम्, फेनिलम्, सौवीरम्, बदरम्, घोण्टा, इति ६ **बदरीफलस्य**[5] ॥—स्वादुकण्टकः, विकङ्कतः, स्रुवावृक्षः, ग्रन्थिलः, व्याघ्रपात्, इति ५ **विकङ्कतस्य**[6] ॥—ऐरावतः, नागरङ्गः, नादेयी, भूमिजम्बुका, इति ४ **नागरङ्गस्य**[7] ॥—तिन्दुकः, स्फूर्जकः, कालस्कन्धः, शितिसारकः, इति ४ **तिन्दुकस्य**[8] ॥—काकेन्दुः, कुलकः, काकतिन्दुकः, काकपीलुकः, इति ४

१ शेलट, सालेट, भोंकरी. २ चार. ३ शिवणी. ४ बोर (वृक्ष). ५ बोर (फळ). ६ वेहळी. ७ नारिंग. ८ तेंडू टेंभुरणी.

गोलीढो झाटलो घण्टापाटलिर्मोक्षमुष्ककौ ७२७
तिलकः क्षुरकः श्रीमान् समौ पिचुलझावुकौ ७२८
श्रीपर्णिका कुमुदिका कुम्भी कैडर्यकट्फलौ ७२९
क्रमुकः पट्टिकाख्यः स्यात् पट्टी लाक्षाप्रसादनः ७३०
तूदस्तु यूपः क्रमुको ब्रह्मण्यो ब्रह्मदारु च ७३१
तूलं च नीपप्रियककदम्बास्तु हलिप्रियः ७३२
वीरवृक्षोऽरुष्करोऽग्निमुखी भल्लातकी त्रिषु ७३३
गर्दभाण्डे कन्दरालकपीतनसुपार्श्वकाः ७३४
प्लक्षश्च तिन्तिडी चिञ्चाऽम्लिकाऽथो पीतसारके ७३५
सर्जकासनबन्धूकपुष्पप्रियकजीवकाः ७३६
साले तु सर्जकार्श्याश्वकर्णकाः सस्यसम्बरः ७३७
नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोऽर्जुनः ७३८
राजादनः फलाध्यक्षः क्षीरिकायामथ द्वयोः ७३९

---

[1]**काकतिन्दुकस्य** ॥—गोलीढः, झाटलः, घण्टापाटलिः, मोक्षः, मुष्ककः, इति ५ [2]**घण्टापाटलेः** ॥—तिलकः, क्षुरकः, श्रीमान्, इति ३ [3]**तिलकस्य** ॥—पिचुलः, झावुकः, इति २ [4]**झावुकस्य** ॥—श्रीपर्णिका, कुमुदिका, कुम्भी, कैडर्यः, कट्फलः, इति ५ [5]**कुम्भ्याः** ॥—क्रमुकः, पट्टिकाख्यः, पट्टी, लाक्षाप्रसादनः, इति ४ **लोहितलोध्रस्य** ॥—तूदः, यूपः, क्रमुकः, ब्रह्मण्यः, ब्रह्मदारु, तूलम्, इति ६ [6]**अश्वत्थाकारे वृक्षभेदे** ॥ नीपः, प्रियकः, कदम्बः, हलिप्रियः, इति ४ [7]**कदम्बस्य** ॥ वीरवृक्षः, अरुष्करः, अग्निमुखी, भल्लातकी, इति ४ [8]**भल्लातक्याः** । त्रिषु स्त्रीपुंनपुंसकेषु ॥—गर्दभाण्डः, कन्दरालः, कपीतनः, सुपार्श्वकः, प्लक्षः, इति ५ [9]**प्लक्षस्य** ॥—तिन्तिडी, चिञ्चा, अम्लिका, इति ३ [10]**चिञ्चायाः** ॥—पीतसारकः, सर्जकः, असनः, बन्धूकपुष्पः, प्रियकः, जीवकः, इति ६ [11]**जीवकस्य** ॥—सालः, सर्जः, कार्श्यः, अश्वकर्णकः, सस्यसम्बरः, इति ५ [12]**शालवृक्षस्य** ॥—नदीसर्जः, वीरतरुः, इन्द्रद्रुः, ककुभः, अर्जुनः, इति ५ [13]**अर्जुनवृक्षस्य** ॥—राजादनः, फलाध्यक्षः, क्षीरिका, इति ३ [14]**क्षीरिकायाः** ॥—

१ कडु टेंभुरणी, काजरा, कुचला. २ मोरवा ३ तिळवा, तिलकपुष्प. ४ तिलकभेद (कोबी?). ५ कायफळ. ६ पारसा पिंपळ. ७ कळंब. ८ बिबवा. ९ लाखी पिंपरी. १० चिंच. ११ असणा (भेद २) १२ सालई. १३ अर्जुनवृक्ष. १४ खिरणी.

इङ्गुदी तापसतरुर्भूर्जे चर्मिमृदुत्वचौ ७४०
पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलिर्द्वयोः ७४१
पिच्छा तु शाल्मलीवेष्टे रोचनः कूटशाल्मलिः ७४२
चिरबिल्वो नक्तमालः करजश्च करञ्जके ७४३
प्रकीर्यः पूतिकरजः पूतिकः कलिमारकः ७४४
करञ्जभेदाः षड्ग्रन्थो मर्कट्यङ्गारवल्लरी ७४५
रोही रोहितकः प्लीहशत्रुर्दाडिमपुष्पकः ७४६
गायत्री बालतनयः खदिरो दन्तधावनः ७४७
अरिमेदो विट्खदिरे कदरः खदिरे सिते ७४८
सोमवल्कोऽप्यथ व्याघ्रपुच्छगन्धर्वहस्तकौ ७४९
एरण्ड उरुबूकश्च रुचकश्चित्रकश्च सः ७५०
चञ्चुः पञ्चाङ्गुलो मण्डवर्धमानव्यडम्बकाः ७५१
अल्पा शमी शमीरः स्याच्छमी सक्तुफला शिवा ७५२

---

इङ्गुदी, तापसतरुः, इति २ [1]**इङ्गुद्याः** ॥—भूर्जः, चर्मी, मृदुत्वक्, इति ३ [2]**भूर्जवृक्षस्य** ॥—पिच्छिला, पूरणी, मोचा, स्थिरायुः, शाल्मलिः, इति ५ [3]**शाल्मल्याः** । द्वयोः स्त्रीपुंसयोः ॥—शाल्मल्या वेष्टे निर्यासे [4]**पिच्छा** इति १ ॥—रोचनः, कूटशाल्मलिः, इति २ [5]**कूटशाल्मल्याः** ॥—चिरबिल्वः, नक्तमालः, करजः, करञ्जकः, इति ४ [6]**करञ्जवृक्षस्य** ॥—प्रकीर्यः, पूतिकरजः, पूतिकः, कलिमारकः, इति ४ [7]**पूतिकस्य** ॥—षड्ग्रन्थः, मर्कटी, अङ्गारवल्लरी, एते ३ **करञ्जभेदाः** ॥—रोही, रोहितकः, प्लीहशत्रुः, दाडिमपुष्पकः, इति ४ [8]**रोहितकस्य** ॥ गायत्री, बालतनयः, खदिरः, दन्तधावनः, इति ४ [9]**खदिरस्य** ॥ अरिमेदः, विट्खदिरः, इति २ **दुर्गन्धिखदिरस्य** ॥—**सिते** शुक्लसारे **खदिरे** कदरः, सोमवल्कः, इति २ ॥—व्याघ्रपुच्छः, गन्धर्वहस्तकः, एरण्डः, उरुबूकः, रुचकः, चित्रकः, चञ्चुः, पञ्चाङ्गुलः, मण्डः, वर्धमानः, व्यडम्बकः, इति ११ **एरण्डस्य** ॥—या अल्पा स्वल्पाकारा शमी स [10]**शमीर** इति ॥—

१ हिंगणबेट. २ भूर्जवृक्ष. ३ सांवरी. ४ सांवरीचा डिंक. ५ काळी सांवरी. ६ करंजवृक्ष. ७ घाणेरा करंज, कांटे करंज. ८ रक्तरोहिडा. ९ खैर. १० लहान शमी.

पिण्डीतको मरुबकः श्वसनः करहाटकः ७५३
शल्यश्च मदने शक्रपादपः पारिभद्रकः ७५४
भद्रदारु द्रुकिलिमं पीतदारु च दारु च ७५५
पूतिकाष्ठं च सप्त स्युर्देवदारुण्यथ द्वयोः ७५६
पाटलिः पाटलाऽमोघा काचस्थाली फलेरुहा ७५७
कृष्णवृन्ता कुबेराक्षी श्यामा तु महिलाह्वया ७५८
लता गोवन्दिनी गुन्द्रा प्रियङ्गुः फलिनी फली ७५९
विष्वक्सेना गन्धफली कारम्भा प्रियकश्च सा ७६०
मण्डूकपर्णपत्रोर्णनटकट्वङ्गटुण्टुकाः ७६१
स्योनाकशुकनासर्क्षदीर्घवृन्तकुटन्नटाः ७६२
शोणकश्चारलौ तिष्यफला त्वामलकी त्रिषु ७६३
अमृता च वयस्था च त्रिलिङ्गस्तु बिभीतकः ७६४
नाक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः ७६५

---

शमी, सक्तुफला, शिवा, इति ३ **शम्याः** ॥—पिण्डीतकः, मरुबकः, श्वसनः, करहाटकः, शल्यः, मदनः, इति ६ **मदनस्य**[1] ॥—शक्रपादपः, पारिभद्रकः, भद्रदारु, द्रुकिलिमम्, पीतदारु, दारु, पूतिकाष्ठम्, इति ७ **देवदारुणि**[2] ॥—पाटलिः, पाटला, अमोघा, काचस्थाली, फलेरुहा, कृष्णवृन्ता, कुबेराक्षी, इति ७ **पाटलायाः**[3] ॥—तत्र पाटलिर्द्वयोः स्त्रीपुंसयोः ॥—श्यामा, महिलाह्वया, लता, गोवन्दिनी, गुन्द्रा, प्रियङ्गुः, फलिनी, फली, विष्वक्सेना, गन्धफली, कारम्भा, प्रियकः, इति १२ **प्रियङ्गुवृक्षे**[4] । तत्र प्रियकः पुंसि । शेषं स्त्रियाम् ॥—मण्डूकपर्णः, पत्रोर्णः, नटः, कट्वङ्गः, टुण्टुकः, स्योनाकः, शुकनासः, ऋक्षः, दीर्घवृन्तः, कुटन्नटः, शोणकः, अरलुः, इति १२ **शोणकस्य**[5] ॥—तिष्यफला, आमलकी, अमृता, वयस्था, इति ४ **आमलक्याः**[6]। 'त्रिष्वि'त्युक्तेः आमलकः, आमलकम् ॥—बिभीतकः, अक्षः, तुषः, कर्षफलः, भूतावासः, कलिद्रुमः, इति ६ **बिभीतकस्य**[7] ॥

---

१ गोळा. २ देवदार. ३ पाडळ. ४ वाघांटी, टेंटू. ५ दिंडा. ६ आंवळी. ७ धाटिंग, (बेहडा).

अभया त्वव्यथा पथ्या कायस्था पूतनाऽमृता ७६६
हरीतकी हैमवती चेतकी श्रेयसी शिवा ७६७
पीतद्रुः सरलः पूतिकाष्ठं चाथ द्रुमोत्पलः ७६८
कर्णिकारः परिव्याधो लकुचो लिकुचो डहुः ७६९
पनसः कण्टकिफलो निचुलो हिज्जलोऽम्बुजः ७७०
काकोदुम्बरिका फल्गुर्मलयूर्जघनेफला ७७१
अरिष्टः सर्वतोभद्रहिङ्गुनिर्यासमालकाः ७७२
पिचुमन्दश्च निम्बेऽथ पिच्छिलाऽगुरुशिंशपा ७७३
कपिला भस्मगर्भा सा शिरीषस्तु कपीतनः ७७४
भण्डिलोऽप्यथ चाम्पेयश्चम्पको हेमपुष्पकः ७७५
एतस्य कलिका गन्धफली स्यादथ केसरे ७७६
बकुलो वञ्जुलोऽशोके समौ करकदाडिमौ ७७७
चाम्पेयः केसरो नागकेसरः काञ्चनाह्वयः ७७८

---

त्रिलिङ्गत्वाद्विभीतकी विभीतकमिति च ॥—अभया, अव्यथा, पथ्या, कायस्था, पूतना, अमृता, हरीतकी, हैमवती, चेतकी, श्रेयसी, शिवा, इति ११ **हरीतक्याः**[1] ॥—पीतद्रुः, सरलः, पूतिकाष्ठम्, इति ३ **सरलस्य**[2] ॥—द्रुमोत्पलः, कर्णिकारः, परिव्याधः, इति ३ **कर्णिकारस्य**[3] ॥—लकुचः, लिकुचः, डहुः, इति ३ **लिकुचस्य**[4] ॥—पनसः, कण्टकिफलः, इति २ **पनसस्य**[5] ॥—निचुलः, हिज्जलः, अम्बुजः, इति ३ **जलवेतसभेदस्य**[6] ॥—काकोदुम्बरिका, फल्गुः, मलयूः, जघनेफला, इति ४ **मलयोः**[7] ॥—अरिष्टः, सर्वतोभद्रः, हिङ्गुनिर्यासः, मालकः, पिचुमन्दः, निम्बः, इति ६ **निम्बस्य** ॥—पिच्छिला, अगुरुशिंशपा, कपिला, भस्मगर्भा, इति ४ **कपिलायाः**[8] । अगुरु इति पृथक् पदं वा ॥—शिरीषः, कपीतनः, भण्डिलः, इति ३ **शिरीषस्य**[9] ॥—चाम्पेयः, चम्पकः, हेमपुष्पकः, इति ३ **चंपकस्य**[10] ॥—एतस्य चम्पकस्य कलिका **गन्धफली** इति १ ॥—केसरः, बकुलः, इति २ **बकुलस्य**[11] ॥—वञ्जुलः, अशोकः, इति २ **अशोकस्य** ॥—करकः, दाडिमः, इति २ **दाडिमस्य**[12] ॥—चाम्पेयः, केसरः, नागकेसरः, काञ्चनाह्वयः, इति ४

---

१ हरडा. २ देवदार. ३ पांगारा. ४ ओट. ५ फणस. ६ इजर, (समुद्रफळ?). ७ काळा उंबर, खर्वत, बोखाडा. ८ शिसवा. ९ शिरस. १० सोनचाफा. ११ ओंवळ. १२ डाळिंब.

जया जयन्ती तर्कारी नादेयी वैजयन्तिका ७७९
श्रीपर्णमग्निमन्थः स्यात् कणिका गणिकारिका ७८०
जयोऽथ कुटजः शक्रो वत्सको गिरिमल्लिका ७८१
एतस्यैव कलिङ्गेन्द्रयवभद्रयवं फले ७८२
कृष्णपाकफलाविग्नसुषेणाः करमर्दके ७८३
कालस्कन्धस्तमालः स्यात्तापिच्छोऽप्यथ सिन्दुके ७८४
सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि ७८५
वेणी खरा गरी देवताडो जीमूत इत्यपि ७८६
श्रीहस्तिनी तु भूरुण्डी तृणशून्यं तु मल्लिका ७८७
भूपदी शीतभीरुश्च सैवास्फोटा वनोद्भवा ७८८
शेफालिका तु सुवहा निर्गुण्डी नीलिका च सा ७८९
सिताऽसौ श्वेतसुरसा भूतवेश्यथ मागधी ७९०
गणिका यूथिकाऽम्बष्ठा सा पीता हेमपुष्पिका ७९१

**चाम्पेयस्य** ॥—जया, जयन्ती, तर्कारी, नादेयी, वैजयन्तिका, इति ५ **वैजयन्तिकायाः** ॥—श्रीपर्णम्, अग्निमन्थः, कणिका, गणिकारिका, जयः, इति ५ **कणिकायाः** ॥—कुटजः, शक्रः, वत्सकः, गिरिमल्लिका, इति ४ **कुटजस्य** ॥—एतस्यैव कुटजस्य फले **कलिङ्गम्, इन्द्रयवम्, भद्रयवम्,** इति ३ ॥—कृष्णपाकफलः, अविघ्नः, सुषेणः, करमर्दकः, इति ४ **करमर्दकस्य** ॥—कालस्कन्धः, तमालः, तापिच्छः, इति ३ **तमालस्य** ॥—सिन्दुकः, सिन्दुवारः, इन्द्रसुरसः, निर्गुण्डी, इन्द्राणिका, इति ५ **सिन्दुवारस्य** ॥—वेणी, खरा, गरी, देवताडः, जीमूतः, इति ५ **देवतालस्य** ॥—श्रीहस्तिनी, भूरुण्डी, इति २ **हस्तिकर्णाभपत्रस्य शाकभेदस्य** ॥—तृणशून्यम्, मल्लिका, भूपदी, शीतभीरुः, इति ४ **मल्लिकायाः** ॥—सैव माल्लिका वनोद्भवा **आस्फोटे**त्युच्यते ॥—शेफालिका, सुवहा, निर्गुण्डी, नीलिका, इति ४ **कृष्णपुष्पाया निर्गुण्ड्याः** ॥—असौ निर्गुण्डी, **सिता, श्वेतसुरसा, भूतवेशी,** इति चोच्यते ॥—मागधी, गणिका, यूथिका, अम्बष्ठा, इति ४ **यूथिकायाः** ॥

१ नागचाफा. २ टाहाकळ, थोर ऐराण. ३ नरवेल. ४ कुडा. ५ करवंद. ६ निगडी, निर्गुडी. ७ देवडांगरी. ८ थोर कुर्डई. ९ मोगरी. १० रानमोगरी. ११ राननिर्गुडी. १२ कातरीनिर्गुडी. १३ जुई.

अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता ७९२
सुमना मालती जातिः सप्तला नवमालिका ७९३
माघ्यं कुन्दं रक्तकस्तु बन्धूको बन्धुजीवकः ७९४
सहा कुमारी तरणिरम्लानस्तु महासहा ७९५
तत्र शोणे कुरबकस्तत्र पीते कुरण्टकः ७९६
नीली झिण्टी द्वयोर्बाणा दासी चार्तगलश्च सा ७९७
सैरेयकस्तु झिण्टी स्यात्तस्मिन् कुरबकोऽरुणे ७९८
पीता कुरण्टको झिण्टी तस्मिन् सहचरी द्वयोः ७९९
ओण्ड्रपुष्पं जपापुष्पं वज्रपुष्पं तिलस्य यत् ८००
प्रतिहासशतप्रासचण्डातहयमारकाः ८०१
करवीरे करीरे तु क्रकरग्रन्थिलावुभौ ८०२
उन्मत्तः कितवो धूर्तो धत्तूरः कनकाह्वयः ८०३

---

सा यूथिका पीता पीतपुष्पा चेत् **हेमपुष्पिका** स्यात् ॥—अतिमुक्तः, पुण्ड्रकः, वासन्ती, माधवी, लता, इति ५ **कुन्द[1]भेदस्य** ॥— सुमनाः, मालती, जातिः, इति ३ **जा[2]तेः** । तत्र सुमनाः सान्तः ॥—सप्तला ॥—नवमालिका, इति २ **न[3]वमालिकायाः** ॥—माघ्यम, कुन्दम्, इति २ **कुन्दस्य** ॥—रक्तकः, बन्धूकः बन्धुजीवकः, इति ३ **ब[4]न्धूकस्य** ॥—सहा, कुमारी, तरणिः, इति ३ **कु[5]मार्याः** ॥—अम्लानः, महासहा, इति २ **म[6]हासहायाः** ॥—तत्राम्लाने शोणे रक्ते **कुरबक** इत्येकम् ॥—तत्राम्लाने पीतवर्णे **कुरण्टक** इत्येकम् ॥—नीली नीलवर्णा या झिण्टी तत्र **बाणा, दासी, आर्तगलः**, इति ३ ॥ द्वयोरित्युक्तेर्बाण इत्यपि ॥—सैरेयकः, झिण्टी, इति २ **झि[7]ण्टीमात्रस्य** ॥ तस्मिन्सैरेयकेऽरुणे रक्तवर्णे **कुरबक** इत्येकम् ॥—या पीतपुष्पा झिण्टी सा **कुरण्टक** इत्युच्यते । तस्मिन्कुरण्टके **सहचरी**त्यपि । द्वयोरित्युक्तेः **सहचर** इत्यपि ॥—ओण्ड्रपुष्पम्, जपापुष्पम्, इति २ **ज[8]पापुष्पस्य** ॥—यत्तिलस्य पुष्पं **तद्वज्रपुष्प**संज्ञकमेकम् ॥—प्रतिहासः, शतप्रासः, चण्डातः, हयमारकः, करवीरः, इति ५ **क[9]रवीरस्य** ॥—करीरः, क्रकरः, ग्रन्थिलः, इति ३ **क[10]रीरस्य** ॥—उन्मत्तः, कितवः, धूर्तः, धत्तूरः,

१ कस्तुरमोगरी. २ चमेली. ३ बटमोगरा. ४ दुपारी. ५ कांटेशेंवती, लहान रानशेंवती. ६ आबोली. ७ कोरांटी. ८ जास्वंद. ९ कण्हेर. १० नेवती.

मातुलो मदनश्चास्य फले मातुलपुत्रकः ८०४
फलपूरो बीजपूरो रुचको मातुलुङ्गके ८०५
समीरणो मरुबकः प्रस्थपुष्पः फणिज्जकः ८०६
जम्बीरोऽप्यथ पर्णासे कठिञ्जरकुठेरकौ ८०७
सितेऽर्जकोऽत्र पाठी तु चित्रको वह्निसंज्ञकः ८०८
अर्काह्ववसुकास्फोटगणरूपविकीरणाः ८०९
मन्दारश्चार्कपर्णोऽत्र शुक्लेऽलर्कप्रतापसौ ८१०
शिवमल्ली पाशुपत एकाष्ठीलो बुको वसुः ८११
वन्दा वृक्षादनी वृक्षरुहा जीवन्तिकेत्यपि ८१२
वत्सादनी छिन्नरुहा गुडूची तन्त्रिकाऽमृता ८१३
जीवन्तिका सोमवल्ली विशल्या मधुपर्ण्यपि ८१४
मूर्वा देवी मधुरसा मोरटा तेजनी स्रुवा ८१५
मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि ८१६
पाठाऽम्बष्ठा विद्धकर्णी स्थापनी श्रेयसी रसा ८१७

कनकाह्वयः, मातुलः, मदनः, इति ७ **धत्तूरस्य**[1]। अस्य धत्तूरस्य फले **मातुलपुत्रक** इत्येकम् ॥—फलपूरः, बीजपूरः, रुचकः, मातुलुङ्गकः, इति ४ **मातुलुङ्गस्य**[2] ॥—समीरणः, मरुबकः, प्रस्थपुष्पः, फणिज्जकः, जम्बीरः, इति ५ **जम्बीरस्य**[3] ॥—पर्णासः, कठिञ्जरः, कुठेरकः, इति ३ **पर्णासस्य**[4] ॥—अत्र पर्णासे सिते काण्डपुष्पाभ्यां श्वेते **अर्जक** इत्येकम ॥—पाठी, चित्रकः, वह्निसंज्ञकः, इति ३ **चित्रकस्य** ॥—अर्काह्वः, वसुकः, आस्फोटः, गणरूपः, विकीरणः, मन्दारः, अर्कपर्णः, इति ७ **अर्कस्य**[5] ॥—अत्रार्के शुक्ले **अलर्कः, प्रतापसः**, इति २॥—शिवमल्ली, पाशुपतः, एकाष्ठीलः, बुकः, वसुः, इति ५ **बुकस्य**[6] ॥—वन्दा, वृक्षादनी, वृक्षरुहा, जीवन्तिका, इति ४ **वृक्षोपरिजातलताविशेषस्य**[7] ॥—वत्सादनी, छिन्नरुहा, गुडूची, तन्त्रिका, अमृता, जीवन्तिका, सोमवल्ली, विशल्या, मधुपर्णी, इति ९ **गुडूच्याः**[8] ॥ – मूर्वा, देवी, मधुरसा, मोरटा, तेजनी, स्रुवा, मधूलिका, मधुश्रेणी, गोकर्णी, पीलुपर्णी, इति १० **मूर्वायाः**[9] ॥—पाठा, अम्बष्ठा, विद्धकर्णी, स्थापनी, श्रेयसी, रसा, एकाष्ठीला, पाप-

१ धोतरा. २ महाळुंग. ३ सफेत मरवा. ४ आजवला, बावरी. ५ रुई. ६ रुईमंदार, ( थोर बकुळी ? ). ७ बेंदले, बांधे. ८ गुळवेल. ९ मोरवेल, ( मूर ).

एकाष्ठीला पापचेली प्राचीना वनतिक्तिका ८१८
कटुः कटंभराऽशोकरोहिणी कटुरोहिणी ८१९
मत्स्यपित्ता कृष्णभेदी चक्राङ्गी शकुलादनी ८२०
आत्मगुप्ताऽजहाऽव्यण्डा कण्डुरा प्रावृषायणी ८२१
ऋष्यप्रोक्ता शूकशिम्बिः कपिकच्छुश्च मर्कटी ८२२
चित्रोपचित्रा न्यग्रोधी द्रवन्ती शम्बरी वृषा ८२३
प्रत्यक्श्रेणी सुतश्रेणी रण्डा मूषिकपर्ण्यपि ८२४
अपामार्गः शैखरिको धामार्गवमयूरकौ ८२५
प्रत्यक्पर्णी केशपर्णी किणिही खरमञ्जरी ८२६
हञ्जिका ब्राह्मणी पद्मा भार्गी ब्राह्मणयष्टिका ८२७
अङ्गारवल्ली बालेयशाकबर्बरवर्धकाः ८२८
मञ्जिष्ठा विकसा जिङ्गी समङ्गा कालमेषिका ८२९
मण्डूकपर्णी भण्डीरी भण्डी योजनवल्ल्यपि ८३०
यासो यवासो दुःस्पर्शो धन्वयासः कुनाशकः ८३१
रोदनी कच्छुराऽनन्ता समुद्रान्ता दुरालभा ८३२

---

चेली, प्राचीना, वनतिक्तिका, इति १० **पाठायाः**[1] ॥ कटुः, कटम्भरा, अशोकरोहिणी, कटुरोहिणी, मत्स्यपित्ता, कृष्णभेदी, चक्राङ्गी, शकुलादनी, इति ८ **कटुरोहिण्याः**[2] ॥—आत्मगुप्ता, अजहा, अव्यण्डा, कण्डुरा, प्रावृषायणी, ऋष्यप्रोक्ता, शूकशिम्बिः, कपिकच्छुः, मर्कटी, इति ९ **मर्कट्याः**[3] ॥—चित्रा, उपचित्रा, न्यग्रोधी, द्रवन्ती, शम्बरी, वृषा, प्रत्यक्श्रेणी, सुतश्रेणी, रण्डा, मूषिकपर्णी, इति १० **मूषिकपर्ण्याः**[4] ॥—अपामार्गः, शैखरिकः, धामार्गवः, मयूरकः, प्रत्यक्पर्णी, केशपर्णी. किणिही, खरमञ्जरी, इति ८ **अपामार्गस्य**[5] ॥—हञ्जिका, ब्राह्मणी, पद्मा, भार्गी, ब्राह्मणयष्टिका, अङ्गारवल्ली, बालेयशाकः, बर्बरः, वर्धकः, इति ९ **भार्ग्याः**[6] ॥—मञ्जिष्ठा, विकसा, जिङ्गी, समङ्गा, कालमेषिका, मण्डूकपर्णी, भण्डीरी, भण्डी, योजनवल्ली, इति ९ **मञ्जिष्ठायाः**[7] ॥—यासः, यवासः, दुःस्पर्शः, धन्वयासः, कुनाशकः, रोदनी, कच्छुरा, अनन्ता, समुद्रान्ता, दुरालभा, इति १० **धन्वयासस्य**[8] ॥—पृश्नि-

---

१ पहाडमूळ. २ केदारकुटकी. ३ कुहिली. ४. उंदिरकानी. ५. आघाडा. ६ भारंग. ७ मंजिष्ठ. ८ धमासा.

पृश्निपर्णी पृथक्पर्णी चित्रपर्ण्यङ्घ्रिवल्लिका ८३३
क्रोष्टुविन्ना सिंहपुच्छी कलशिर्धावनिर्गुहा ८३४
निदिग्धिका स्पृशी व्याघ्री बृहती कण्टकारिका ८३५
प्रचोदनी कुली क्षुद्रा दुःस्पर्शा राष्ट्रिकेत्यपि ८३६
नीली काला क्लीतकिका ग्रामीणा मधुपर्णिका ८३७
रञ्जनी श्रीफली तुत्था द्रोणी दोला च नीलिनी ८३८
अवल्गुजः सोमराजी सुवल्लिः सोमवल्लिका ८३९
कालमेषी कृष्णफला बाकुची पूतिफल्यपि ८४०
कृष्णोपकुल्या वैदेही मागधी चपला कणा ८४१
उषणा पिप्पली शौण्डी कोलाऽथ करिपिप्पली ८४२
कपिवल्ली कोलवल्ली श्रेयसी वशिरः पुमान् ८४३
चव्यं तु चविका काकचिञ्चीगुञ्जे तु कृष्णला ८४४
पलंकषा त्विक्षुगन्धा श्वदंष्ट्रा स्वादुकण्टकः ८४५
गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि ८४६

---

पर्णी, पृथक्पर्णी, चित्रपर्णी, अङ्घ्रिवल्लिका, क्रोष्टुविन्ना, सिंहपुच्छी, कलशिः, धावनिः, गुहा, इति ९ **सिंहपुच्छ्याः**[1] ॥—निदिग्धिका, स्पृशी, व्याघ्री, बृहती, कण्टकारिका, प्रचोदनी, कुली, क्षुद्रा, दुःस्पर्शा, राष्ट्रिका, इति १० **कण्टकारिकायाः**[2] ॥—नीली, काला, क्लीतकिका, ग्रामीणा, मधुपर्णिका, रञ्जनी, श्रीफली, तुत्था, द्रोणी, दोला, नीलिनी, इति ११ **नील्याः**[3] ॥—अवल्गुजः, सोमराजी, सुवल्लिः, सोमवल्लिका, कालमेषी, कृष्णफला, बाकुची, पूतिफली, इति ८ **बाकुच्याः**[4] ॥—कृष्णा, उपकुल्या, वैदेही, मागधी, चपला, कणा, उषणा, पिप्पली, शौण्डी, कोला, इति १० ॥ **पिप्पल्याः**[5] ॥—करिपिप्पली, कपिवल्ली, कोलवल्ली, श्रेयसी, वशिरः, इति ५ **गजपिप्पल्याः** ॥—चव्यम्, चविका, इति २ **चव्यस्य**[6] ॥—काकचिञ्ची, गुञ्जा, कृष्णला, इति ३ **गुञ्जायाः**[7] ॥—पलंकषा, इक्षुगन्धा, श्वदंष्ट्रा, स्वादुकण्टकः, गोकण्टकः, गोक्षुरकः, वनशृङ्गाटः, इति ७ **गोक्षु**[8]-

---

१ पिठवण. २ रिंगणी. ३ नीळी. ४ बावची. ५ पिंपळी. ६ चरक. ७ गुंज. ८ गोक्षुर, सरांटा.

विश्वा विषा प्रतिविषाऽतिविषोपविषाऽरुणा ८४७
शृङ्गी महौषधं चाथ क्षीरावी दुग्धिका समे ८४८
शतमूली बहुसुताऽभीरुरिन्दीवरी वरी ८४९
ऋष्यप्रोक्ताऽभीरुपत्रीनारायण्यः शतावरी ८५०
अहेरुरथ पीतद्रुकालीयकहरिद्रवः ८५१
दार्वी पचंपचा दारुहरिद्रा पर्जनीत्यपि ८५२
वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्विका ८५३
शुक्ला हैमवती वैद्यमातृसिंह्यौ तु वाशिका ८५४
वृषोऽटरूषः सिंहास्यो वासको वाजिदन्तकः ८५५
आस्फोटा गिरिकर्णी स्याद्विष्णुक्रान्ताऽपराजिता ८५६
इक्षुगन्धा तु काण्डेक्षुकोकिलाक्षेक्षुरक्षुराः ८५७
शालेयः स्याच्छीतशिवश्छत्रा मधुरिका मिसिः ८५८
मिश्रेयाप्यथ सीहुण्डो वज्रः स्नुक् स्त्री स्नुही गुडा ८५९
समन्तदुग्धाऽथो वेल्लममोघा चित्रतण्डुला ८६०

रस्य ॥—विश्वा, विषा, प्रतिविषा, अतिविषा, उपविषा, अरुणा, शृङ्गी, महौषधम्, इति ८ **अतिविषायाः**[1] ॥—क्षीरावी, दुग्धिका, इति २ **दुग्धिकायाः**[2] ॥—शतमूली, बहुसुता, अभीरुः, इन्दीवरी, वरी, ऋष्यप्रोक्ता, अभीरुपत्री, नारायणी, शतावरी, अहेरुः, इति १० **शतावर्याः**[3] ॥—पीतद्रुः, कालीयकः, हरिद्रुः, दार्वी, पचंपचा, दारुहरिद्रा, पर्जनी, इति ७ **पर्जन्याः**[4] ॥—वचा, उग्रगन्धा, षड्ग्रन्था, गोलोमी, शतपर्विका, इति ५ **वचायाः**[5] ॥—या शुक्ला वचा सा **हैमवतीति** १ ॥—वैद्यमाता, सिंही, वाशिका, वृषः, अटरूषः, सिंहास्यः, वासकः, वाजिदन्तकः, इति ८ **अटरूषस्य**[6] ॥—आस्फोटा, गिरिकर्णी, विष्णुक्रान्ता, अपराजिता, इति ४ **विष्णुक्रान्तायाः**[7] ॥—इक्षुगन्धा, काण्डेक्षुः, कोकिलाक्षः, इक्षुरः, क्षुरः, इति ५ **कोकिलाक्षस्य**[8] ॥—शालेयः, शीतशिवः, छत्रा, मधुरिका, मिसिः, मिश्रेया, इति ६ **मधुरिकायाः**[9] ॥—सीहुण्डः, वज्रः, स्नुक्, स्नुही, गुडा, समन्तदुग्धा, इति ६ **वज्रद्रुमस्य**[10] । तत्र स्नुक् स्त्री ॥—वेल्लम्, अमोघा,

१ अतिविष. २ दुग्धी. ३ शतावरी. ४ दारुहळद. ५ वेखंड. ६ अडुळसा. ७ विष्णुक्रांता. ८ कोळिस्ता, तालिमखाना. ९ बडिशेप. १० शेरनिवडुंग.

तण्डुलश्च कृमिघ्नश्च विडङ्गं पुंनपुंसकम् ८६१
बला वाट्यालका घण्टारवा तु शणपुष्पिका ८६२
मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च ८६३
सर्वानुभूतिः सरला त्रिपुटा त्रिवृता त्रिवृत् ८६४
त्रिभण्डी रोचनी श्यामापालिन्द्यौ तु सुषेणिका ८६५
काला मसूरविदलाऽर्धचन्द्रा कालमेषिका ८६६
मधुकं क्लीतकं यष्टिमधुकं मधुयष्टिका ८६७
विदारी क्षीरशुक्लेक्षुगन्धा क्रोष्ट्री तु या सिता ८६८
अन्या क्षीरविदारी स्यान्महाश्वेतर्क्षगन्धिका ८६९
लाङ्गली शारदी तोयपिप्पली शकुलादनी ८७०
खराश्वा कारवी दीप्यो मयूरो लोचमस्तकः ८७१
गोपी श्यामा शारिवा स्यादनन्तोत्पलशारिवा ८७२
योग्यमृद्धिः सिद्धिलक्ष्म्यौ वृद्धेरप्याह्वया इमे ८७३

चित्रतण्डुला, तण्डुलः, कृमिघ्नः, विडङ्गम्, इति ६ **विडङ्गस्य**[1] ॥—बला, वाट्यालका, इति २ **बलायाः**[2] ॥—घण्टारवा, शणपुष्पिका, इति २ **शणपुष्पिकायाः**[3] ॥—मृद्वीका, गोस्तनी, द्राक्षा, स्वाद्वी, मधुरसा इति ५ **द्राक्षायाः**[4] ॥—सर्वानुभूतिः, सरला, त्रिपुटा, त्रिवृता, त्रिवृत्, त्रिभण्डी, रोचनी, इति ७ **त्रिवृतायाः**[5] ॥—श्यामा, पालिन्दी, सुषेणिका, काला, मसूरविदला, अर्धचन्द्रा, कालमेषिका, इति ७ **कृष्णवर्णायास्त्रिवृतायाः**[6] ॥—मधुकम्, क्लीतकम्, यष्टिमधुकम्, मधुयष्टिका, इति ४ **यष्टिमधुकस्य**[7] ॥—विदारी, क्षीरशुक्ला, इक्षुगन्धा, क्रोष्ट्री, इति ४ **इक्षुगन्धायाः**[8] ॥—क्षीरविदारी, महाश्वेता, ऋक्षगन्धिका, इति ३ **कृष्णभूमिकूष्माण्डस्य**[9] ॥—लाङ्गली, शारदी, तोयपिप्पली, शकुलादनी, इति ४ **शाकमेदस्य**[10] ॥—खराश्वा, कारवी, दीप्यः, मयूरः, लोचमस्तकः, इति ५ **मयूरशिखायाः**[11] ॥—गोपी, श्यामा, शारिवा, अनन्ता, उत्पलशारिवा, इति ५ **उत्पलशारिवायाः**[12] ॥—योग्यम्, ऋद्धिः, सिद्धिः, लक्ष्मीः, इति ४ **ऋद्धिनामकस्य**[13]

१ वावडिंग. २ चिकणा. ३ घागरी, लहान ताग. ४ द्राक्षा. ५ श्वेत निशोत्तर, तेंडू. ६ निगडी, तिधारें. ७ जेष्ठमध. ८ श्वेत भुईकोंहळा. ९ काळा भुईकोंहळा. १० मोगुड, जलपिंपळी. ११ मोरशेंडा, (अजमोद ?). १२ उपळसरी. १३ केवणी, मुरुडशेंग.

कदली वारणबुसा रम्भा मोचांशुमत्फला ८७४
काष्ठीला मुद्गपर्णी तु काकमुद्गा सहेत्यपि ८७५
वार्ताकी हिङ्गुली सिंही भण्टाकी दुष्प्रधर्षिणी ८७६
नाकुली सुरसा रास्ना सुगन्धा गन्धनाकुली ८७७
नकुलेष्टा भुजंगाक्षी छत्राकी सुवहा च सा ८७८
विदारिगन्धांऽशुमती सालपर्णी स्थिरा ध्रुवा ८७९
तुण्डिकेरी समुद्रान्ता कार्पासी बदरेति च ८८०
भारद्वाजी तु सा वन्या शृङ्गी तु ऋषभो वृषः ८८१
गाङ्गेरुकी नागबला झषा ह्रस्वगवेधुका ८८२
धामार्गवो घोषकः स्यान्महाजाली स पीतकः ८८३
ज्योत्स्नी पटोलिका जाली नादेयी भूमिजम्बुका ८८४
स्याल्लाङ्गलिक्यग्निशिखा काकाङ्गी काकनासिका ८८५
गोधापदी तु सुवहा मुसली तालमूलिका ८८६

---

**ओषधिविशेषस्य** ॥—कदली, वारणबुसा, रम्भा, मोचा, अंशुमत्फला, काष्ठीला, इति ६ **कदल्याः** ॥—मुद्गपर्णी, काकमुद्गा, सहा, इति ३ **काकमुद्गायाः**[1] ॥—वार्ताकी, हिङ्गुली, सिंही, भण्टाकी, दुष्प्रधर्षिणी, इति ५ **वार्ताक्याः**[2] ॥—नाकुली, सुरसा, रास्ना, सुगन्धा गन्धनाकुली, नकुलेष्टा भुजङ्गाक्षी, छत्राकी, सुवहा, इति ९ **रास्नायाः**[3] ॥—विदारिगन्धा, अंशुमती, सालपर्णी, स्थिरा, ध्रुवा, इति ५ **सालपर्ण्याः**[4] ॥—तुण्डिकेरी, समुद्रान्ता, कार्पासी, बदरा, इति ४ **कार्पास्याः** ॥—सा कार्पासी वन्या चेत् **भारद्वाजीति** १ ॥ शृङ्गी, ऋषभः, वृषः, इति ३ **ऋषभाख्यौषधिविशेषस्य**[5] ॥—गाङ्गेरुकी, नागबला, झषा, ह्रस्वगवेधुका, इति ४ **बालविशेषस्य**[6] ॥—धामार्गवः, घोषकः, इति २ **घोषवल्ल्याः**[7] ॥— स घोषकः पीतकः पीतपुष्पश्चेत् **महाजालीत्युच्यते** । स्त्रीलिङ्गम् ॥—ज्योत्स्नी, पटोलिका, जाली, इति ३ **पटोलिकायाः**[8] ॥ नादेयी, भूमिजम्बुका, इति २ **भूजम्ब्वाः**[9] ॥—लाङ्गलिकी, अग्निशिखा, इति २ **लाङ्गल्याः**[10] ॥—काकाङ्गी, काकनासिका, इति **काकजङ्घाख्यौषधिविशेषस्य**[11] ॥—गोधापदी, सुवहा, इति २ **हंसपादिकायाः**[12] ॥—मुसली, तालमूलिका, इति २

---

१ रानमूग. २ रानवांगी, डोर्ली. ३ मुंगुसवेल. ४ डवला, साळवण. ५ बैलघांटी. ६ लहान चिकणा. ७ घोसाळी, दोडकी. ८ पडवळी. ९ भुईजांभळी. १० कळलावी, वाघचबका. ११ कावळी. १२ लाल लाजाळू.

अजशृङ्गी विषाणी स्याद्गोजिह्वादार्विके समे ८८७
ताम्बूलवल्ली ताम्बूली नागवल्ल्यप्यथ द्विजा ८८८
हरेणू रेणुका कौन्ती कपिला भस्मगन्धिनी ८८९
एलावालुकमैलेयं सुगन्धि हरिवालुकम् ८९०
वालुकं चाथ पालङ्क्यां मुकुन्दः कुन्दकुन्दुरू ८९१
बालं ह्रीबेरबर्हिष्ठोदीच्यं केशाम्बुनाम च ८९२
कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु ८९३
शैलेयं तालपर्णी तु दैत्या गन्धकुटी मुरा ८९४
गन्धिनी गजभक्ष्या तु सुवहा सुरभी रसा ८९५
महेरणा कुन्दुरुकी सल्लकी ह्लादिनीति च ८९६
अग्निज्वालासुभिक्षे तु धातकी धातुपुष्पिका ८९७
पृथ्वीका चन्द्रवालैला निष्कुटिर्बहुलाऽथ सा ८९८
सूक्ष्मोपकुञ्चिका तुत्था कोरङ्गी त्रिपुटा त्रुटिः ८९९

---

**मुसल्याः**[1] ॥—अजशृङ्गी, विषाणी, इति २ **अजशृङ्ग्याः**[2] ॥—गोजिह्वा, दार्विका, इति २ **गोजिह्वायाः**[3] ॥—ताम्बूलवल्ली, ताम्बूली, नागवल्ली, इति ३ **नागवल्ल्याः**[4] ॥—द्विजा, हरेणुः, रेणुका, कौन्ती, कपिला, भस्मगन्धिनी, इति ६ **रेणुकाख्यगन्धद्रव्यस्य**[5] ॥—एलावालुकम्, ऐलेयम्, सुगन्धि, हरिवालुकम्, वालुकम्, इति ५ **वालुकाख्यगन्धद्रव्यस्य**[6] ॥—पालङ्की, मुकुन्दः, कुन्दः, कुन्दुरुः, इति ४ **कुन्दस्य**[7] ॥—बालम्, ह्रीबेरम्, बर्हिष्ठम्, उदीच्यम्, केशाम्बुनाम, इति ५ **ह्रीबेरस्य**[8] ॥ कालानुसार्यम्, वृद्धम्, अश्मपुष्पम्, शीतशिवम्, शैलेयम्, इति ५ **शैलेयस्य**[9] ॥—तालपर्णी, दैत्या, गन्धकुटी, मुरा, गन्धिनी, इति ५ **मुरायाः**[10] ॥—गजभक्ष्या, सुवहा, सुरभी, रसा, महेरणा, कुन्दुरुकी, सल्लकी, ह्लादिनी, इति ८ **कुन्दुरुक्याः**[11] ॥—अग्निज्वाला, सुभिक्षा, धातकी, धातुपुष्पिका, इति ४ **धातक्याः**[12] ॥—पृथ्वीका, चन्द्रवाला, एला, निष्कुटिः, बहुला, इति ५ **एलायाः**[13] ॥—उपकुञ्चिका, तुत्था, कोरङ्गी, त्रिपुटा, त्रुटिः, इति ५ **सूक्ष्मै-**

१ मुसळकंद. २ मेढशिंगी. ३ दवली, पाथरी. ४ पानवेल. ५ रेणुकबीज ६ वाळुक, कांकडी (?). ७ पालक. ८ वाळा. ९ शिलाजित. १० मोरमांसी. ११ सालई. १२ धायटी, धायफूल. १३ एळिया.

व्याधिः कुष्टं पारिभाव्यं वाप्यं पाकलमुत्पलम् ९००
शङ्खिनी चोरपुष्पी स्यात् केशिन्यथ वितुन्नकः ९०१
झटामलाऽज्झटा ताली शिवा तामलकीति च ९०२
प्रपौण्डरीकं पौण्डर्यमथ तुन्नः कुबेरकः ९०३
कुणिः कच्छः कान्तलको नन्दिवृक्षोऽथ राक्षसी ९०४
चण्डा धनहरी क्षेमदुष्पत्रगणहासकाः ९०५
व्याडायुधं व्याघ्रनखं करजं चक्रकारकम् ९०६
सुषिरा विद्रुमलता कपोताङ्घ्रिर्नटी नली ९०७
धमन्यञ्जनकेशी च हनुर्हट्टविलासिनी ९०८
शुक्तिः शङ्खः खुरः कोलदलं नखमथाढकी ९०९
काक्षी मृत्स्ना तुवरिका मृत्तालकसुराष्ट्रजे ९१०
कुटन्नटं दाशपुरं वानेयं परिपेलवम् ९११

---

**लायाः** ॥—व्याधिः, कुष्टम्, पारिभाव्यम्, वाप्यम्, पाकलम्, उत्पलम्, इति ६ **कुष्ठस्य**[1] ॥—शङ्खिनी, चोरपुष्पी, केशिनी, इति ३ **चोरवल्याः**[2] ॥—वितुन्नकः, झटामला, अज्झटा, ताली, शिवा, तामलकी, इति ६ **भूम्यामलक्याः**[3] ॥—प्रपौण्डरीकम्, पौण्डर्यम्, इति २ **पौण्डर्यस्य**[4] ॥—तुन्नः, कुबेरकः, कुणिः, कच्छः, कान्तलकः, नन्दिवृक्षः, इति ६ **नन्दिवृक्षस्य**[5] ॥—राक्षसी, चण्डा, धनहरी, क्षेमः, दुष्पत्रः, गणहासकः इति ६ **चोराख्यगन्धद्रव्यस्य**[6] ॥—व्याडायुधम्, व्याघ्रनखम्, करजम्, चक्रकारकम्, इति ४ **व्याघ्रनखनामकगन्धद्रव्यस्य**[7] ॥—सुषिरा, विद्रुमलता, कपोताङ्घ्रिः, नटी, नली, धमनी, अञ्जनकेशी, इति ७ **नलीनामकगन्धद्रव्यस्य**[8] ॥—हनुः, हट्टविलासिनी, शुक्तिः, शङ्खः, खुरः, कोलदलम्, नखम्, इति ७ **नखाख्यगन्धद्रव्यस्य**[9] ॥ आढकी, काक्षी, मृत्स्ना, तुवरिका, मृत्तालकम्, सुराष्ट्रजम्, इति ६ **तुवरिकायाः**[10] ॥—कुटन्नटम्, दाश-

---

१ गोडें कोष्ठ. २ सांखवेल. ३ भुई आंवळी. ४ स्थलपद्म(?). ५ नांदरुखी. ६ चोर ओंवा, किरमाणी ओंवा. ७ लघु नखला, वाघनख. ८ पवारी, नली. ९ नखला. १० तूर.

प्लवगोपुरगोनर्दकैवर्तीमुस्तकानि च ९१२
ग्रन्थिपर्णं शुकं बर्हपुष्पं स्थौणेयकुक्कुरे ९१३
मरुन्माला तु पिशुना स्पृक्का देवी लता लघुः ९१४
समुद्रान्ता वधूः कोटिवर्षा लङ्कोपिकेत्यपि ९१५
तपस्विनी जटामांसी जटिला लोमशा मिसी ९१६
त्वक्पत्रमुत्कटं भृङ्गं त्वचं चोचं वराङ्गकम् ९१७
कर्चूरको द्राविडकः काल्पको वेधमुख्यकः ९१८
ओषध्यो जातिमात्रे स्युरजातौ सर्वमौषधम् ९१९
शाकाख्यं पत्रपुष्पादि तण्डुलीयोऽल्पमारिषः ९२०
विशल्याग्निशिखानन्ता फलिनी शक्रपुष्पिका ९२१
स्यादृक्षगन्धा छगलान्त्र्यावेगी वृद्धदारकः ९२२
जुङ्गो ब्राह्मी तु मत्स्याक्षी वयस्था सोमवल्लरी ९२३

पुरम्, वानेयम्, परिपेलवम्, प्लवम्, गोपुरम्, गोनर्दम्, कैवर्तीमुस्तकम्, इति ८ **कैवर्तीमुस्तकस्य**[1] ॥ ग्रन्थिपर्णम्, शुकम्, बर्हपुष्पम्, स्थौणेयम्, कुक्कुरम्, इति ५ **ग्रन्थिपर्णस्य**[2] ॥ मरुन्माला, पिशुना, स्पृक्का, देवी, लता, लघुः, समुद्रान्ता, वधूः, कोटिवर्षा, लङ्कोपिका, इति १० **स्पृक्कायाः**[3] ॥—तपस्विनी, जटामांसी, जटिला, लोमशा, मिसी, इति ५ **जटामांस्याः**[4] ॥ त्वक्पत्रम्, उत्कटम्, भृङ्गम्, त्वचम्, चोचम्, वराङ्गकम्, इति ६ **त्वक्पत्रस्य**[5] ॥—कर्चूरकः, द्राविडकः, काल्पकः, वेधमुख्यकः, इति ४ **कर्चूरकस्य**[6] ॥—फलपाकान्तानां व्रीह्यादीनां जातावेव **ओषध्यः** स्युः ॥—यदा तु ओषधेः रोगहारित्वमात्रं प्रतीयते न त्वन्यत् तदा **औषध**शब्दप्रयोगः ॥—यत् पत्रपुष्पादि तत् **शाक**-संज्ञकम् १ ॥ तण्डुलीयः, अल्पमारिषः, इति २ **तण्डुलीयस्य**[7] ॥—विशल्या, अग्निशिखा, अनन्ता, फलिनी, शक्रपुष्पिका, इति ५ **अग्निशिखायाः**[8] ॥—ऋक्षगन्धा, छगलान्त्री, आवेगी, वृद्धदारकः, जुङ्गः, इति ५ **वृद्धदारकस्य**[9] ॥—ब्राह्मी, मत्स्याक्षी, वयस्था, सोमवल्लरी, इति ४ **सोमलतायाः**[10] ॥—पटुपर्णी,

१ केवडी मोथा. २ गठीवन, भटेरा. ३ पिडका. ४ जटामांसी. ५ दालचिनी. ६ कचर, कचरी. ७ तांदुळजा. ८ कळलावी. ९ वरधारा, जीर्णफंजी. १० सोमवेल.

पटुपर्णी हैमवती स्वर्णक्षीरी हिमावती ९२४
हयपुच्छी तु काम्बोजी माषपर्णी महासहा ९२५
तुण्डिकेरी रक्तफला बिम्बिका पीलुपर्ण्यपि ९२६
बर्बरा कबरी तुङ्गी खरपुष्पाऽजगन्धिका ९२७
एलापर्णी तु सुवहा रास्ना युक्तरसा च सा ९२८
चाङ्गेरी चुक्रिका दन्तशठाम्बष्ठाम्ललोणिका ९२९
सहस्रवेधी चुक्रोऽम्लवेतसः शतवेध्यपि ९३०
नमस्कारी गण्डकारी समङ्गा खदिरेत्यपि ९३१
जीवन्ती जीवनी जीवा जीवनीया मधुस्रवा ९३२
कूर्चशीर्षो मधुरकः शृङ्गह्रस्वाङ्गजीवकाः ९३३
किराततिक्तो भूनिम्बोऽनार्यतिक्तोऽथ सप्तला ९३४
विमला सातला भूरिफेना चर्मकषेत्यपि ९३५
वायसोली स्वादुरसा वयस्थाऽथ मकूलकः ९३६

---

हैमवती, स्वर्णक्षीरी, हिमावती, इति ४ **स्वर्णक्षीर्याः**[1] ॥—हयपुच्छी, काम्बोजी, माषपर्णी, महासहा, इति ४ **माषपर्ण्याः**[2] ॥—तुण्डिकेरी, रक्तफला, बिम्बिका, पीलुपर्णी, इति ४ **तुण्डिकेर्याः**[3] ॥—बर्बरा, कबरी, तुङ्गी, खरपुष्पा, अजगन्धिका, इति ५ **खरपुष्पायाः**[4] ॥—एलापर्णी, सुवहा, रास्ना, युक्तरसा, इति ४ **एलापर्ण्याः**[5] ॥—चाङ्गेरी, चुक्रिका, दन्तशठा, अम्बष्ठा, अम्ललोणिका, इति ५ **अम्ललोणिकायाः**[6] ॥—सहस्रवेधी, चुक्रः, अम्लवेतसः, शतवेधी, इति ४ **अम्लवेतसस्य**[7] ॥—नमस्कारी, गण्डकारी, समङ्गा, खदिरा, इति ४ **खदिरायाः**[8] ॥— जीवन्ती, जीवनी, जीवा, जीवनीया, मधुस्रवा, इति ५ **जीवन्त्याः**[9] । कूर्चशीर्षः, मधुरकः शृङ्गः, ह्रस्वाङ्गः, जीवकः, इति ५ **जीवकस्य**[10] ॥—किराततिक्तः, भूनिम्बः, अनार्यतिक्तः, इति ३ **भूनिम्बस्य**[11] ॥—सप्तला, विमला, सातला, भूरिफेना, चर्मकषा, इति ५ **सप्तलायाः**[12] ॥—वायसोली, स्वादुरसा, वयस्था, इति ३

---

१ पिसोळा. २ रानउडीद. ३ तोंडली. ४ तिळवणी, कानफोडी. ५ कोळिंदण. ६ चुका. ७ अम्लवेतस. ८ लाजाळूं. ९ हरणवेल, हरणदोडी. १० जीवक. ११ किराईत. १२ शिकेकाई.

निकुम्भो दन्तिका प्रत्यक्श्रेण्युदुम्बरपर्ण्यपि ९३७
अजमोदा तूग्रगन्धा ब्रह्मदर्भा यवानिका ९३८
मूले पुष्करकाश्मीरपद्मपत्राणि पौष्करे ९३९
अव्यथाऽतिचरा पद्मा चारटी पद्मचारिणी ९४०
काम्पिल्यः कर्कशश्चन्द्रो रक्ताङ्गो रोचनीत्यपि ९४१
प्रपुन्नाडस्त्वेडगजो दद्रुघ्नश्चक्रमर्दकः ९४२
पद्माट उरणाख्यश्च पलाण्डुस्तु सुकन्दकः ९४३
लतार्कदुद्रुमौ तत्र हरितेऽथ महौषधम् ९४४
लशुनं गृञ्जनारिष्टमहाकन्दरसोनकाः ९४५
पुनर्नवा तु शोथघ्नी वितुन्नं सुनिषण्णकम् ९४६
स्याद्वातकः शीतलोऽपराजिता शणपर्ण्यपि ९४७
पारावताङ्घ्रिः कटभी पण्या ज्योतिष्मती लता ९४८

---

**वयस्थायाः**[1] ॥—मकूलकः, निकुम्भः, दन्तिका, प्रत्यक्श्रेणी, उदुम्बरपर्णी, इति ५ **दन्त्याः**[2] ॥—अजमोदा, उग्रगन्धा, ब्रह्मदर्भा, यवानिका, इति ४ **यवान्याः**[3] ॥—पुष्करम्, काश्मीरम्, पद्मपत्रम्, इति ३ **पौष्करमूले**[4] ॥—अव्यथा, अतिचरा, पद्मा, चारटी, पद्मचारिणी, इति ५ **पद्मचारिण्याः**[5] ॥—काम्पिल्यः, कर्कशः, चन्द्रः, रक्ताङ्गः, रोचनी, इति ५ **रोचन्याः**[6] ॥—प्रपुन्नाडः, एडगजः, दद्रुघ्नः, चक्रमर्दकः, पद्माटः, उरणाख्यः, इति ६ **पद्माटस्य**[7] ॥—पलाण्डुः, सुकन्दकः, इति २ **पलाण्डोः**[8] ॥—हरिते हरिद्वर्णे पलाण्डौ **लतार्कः**[9], **दुद्रुमः**, इति २ ॥—महौषधम्, लशुनम्, गृञ्जनम्, अरिष्टः, महाकन्दः, रसोनकः, इति ६ **लशुनस्य**[10] ॥—पुनर्नवा, शोथघ्नी, इति २ **पुनर्नवायाः**[11] ॥—वितुन्नम्, सुनिषण्णकम्, इति २ **वितुन्नस्य**[12] ॥—वातकः, शीतलः, अपराजिता, शणपर्णी, इति ४ **शणपर्ण्याः**[13] ॥—पारावताङ्घ्रिः, कटभी, पण्या, ज्योतिष्मती, लता, इति ५ **ज्योतिष्मत्याः**[14] ॥—

---

१ काकोली, लहान कावळी. २ दांती, जेपाळ (बीज). ३ ओंवा. ४ पुष्करमूळ. ५ स्थलकमळ. ६ शुंडा रोचनी. ७ टाकळा. ८ कांदा, प्याज. ९ सफेत कांदा. १० लसूण. ११ पुनर्नवा, घेटुळी. १२ कुरडू (भाजी). १३ असनपर्णी, गोकर्णी. १४ मालकांगणी.

**वार्षिकं त्रायमाणा स्यात्त्रायन्ती बलभद्रिका** ९४९
**विष्वक्सेनप्रिया गृष्टिर्वाराही बदरेत्यपि** ९५०
**मार्कवो भृङ्गराजः स्यात् काकमाची तु वायसी** ९५१
**शतपुष्पा सितच्छत्राऽतिच्छत्रा मधुरा मिसिः** ९५२
**अवाक्पुष्पी कारवी च सरणा तु प्रसारिणी** ९५३
**तस्यां कटंभरा राजबला भद्रबलेत्यपि** ९५४
**जनी जतूका रजनी जतुकृच्चक्रवर्तिनी** ९५५
**संस्पर्शाऽथ शटी गन्धमूली षड्ग्रन्थिकेत्यपि** ९५६
**कर्चूरोऽपि पलाशोऽथ कारवेल्लः कठिल्लकः** ९५७
**सुषवी चाथ कुलकं पटोलस्तिक्तकः पटुः** ९५८
**कूष्माण्डकस्तु कर्कारुरुर्वारुः कर्कटी स्त्रियौ** ९५९
**इक्ष्वाकुः कटुतुम्बी स्यात्तुम्ब्यलाबूरुभे समे** ९६०

---

वार्षिकम्, त्रायमाणा, त्रायन्ती, बलभद्रिका, इति ४ **त्रायमाणायाः**[1] ॥—विष्वक्सेनप्रिया, गृष्टिः, वाराही, बदरा, इति ४ **वाराह्याः**[2] ॥—मार्कवः, भृङ्गराजः, इति २ **भृङ्गराजस्य**[3] । अयं सान्तोऽदन्तोऽपि ॥—काकमाची, वायसी, इति २ **वायस्याः**[4] ॥—शतपुष्पा, सितच्छत्रा, अतिच्छत्रा, मधुरा, मिसिः, अवाक्पुष्पी, कारवी, इति ७ **मधुरायाः**[5] ॥—सरणा, प्रसारिणी, कटंभरा, राजबला, भद्रबला, इति ५ **प्रसारिण्याः**[6] ॥—जनी, जतूका, रजनी, जतुकृत्, चक्रवर्तिनी, संस्पर्शा, इति ६ **चक्रवर्तिन्याः**[7] ॥—शटी, गन्धमूली, षड्ग्रन्थिका, कर्चूरः, पलाशः, इति ५ **शट्याः**[8] ॥—कारवेल्लः, कठिल्लकः, सुषवी, इति ३ **कारवेल्लस्य**[9] ॥—कुलकम्, पटोलः, तिक्तकः, पटुः, इति ४ **पटोलस्य**[10] ॥—कूष्माण्डकः, कर्कारुः, इति २ **कूष्माण्डस्य**[11] ॥—उर्वारुः कर्कटी, इति २ **कर्कट्याः**[12] ॥—इक्ष्वाकुः, कटुतुम्बी, इति २ **कटुतुम्ब्याः**[13] ॥—तुम्बी, अलाबूः, इति २ **तुम्ब्याः**[14] ॥—चित्रा,

---

१ त्रायमाण. २ डुकरकंद. ३ माका, भृंगराज. ४ कावळी, काकजघा. ५ शोप. ६ चांदवेल. ७ चाकवत. ८ कापूरकाचरी, आंबेहळद. ९ कारली. १० पडवळ. ११ कोहळा. १२ कांकडी १३ दुध्या कडु भोपळा. १४ काळा भोपळा.

चित्रा गवाक्षी गोडुम्बा विशाला त्विन्द्रवारुणी ९६१
अर्शोघ्नः सूरणः कन्दो गण्डीरस्तु समष्ठिला ९६२
कलम्ब्युपोदिका स्त्री तु मूलकं हिलमोचिका ९६३
वास्तुकं शाकभेदाः स्युर्दूर्वा तु शतपर्विका ९६४
सहस्रवीर्याभार्गव्यौ रुहाऽनन्ताऽथ सा सिता ९६५
गोलोमी शतवीर्या च गण्डाली शकुलाक्षका ९६६
कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम् ९६७
स्याद्भद्रमुस्तको गुन्द्रा चूडाला चक्रलोच्चटा ९६८
वंशे त्वक्सारकर्मारत्वचिसारतृणध्वजाः ९६९
शतपर्वा यवफलो वेणुमस्करतेजनाः ९७०
वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः ९७१

---

गवाक्षी, गोडुम्बा, इति ३ **गोडुम्बायाः**[1] ॥—विशाला, इन्द्रवारुणी, इति २ **इन्द्रवारुण्याः**[2] ॥—अर्शोघ्नः, सूरणः, कन्दः, इति ३ **सूरणस्य**[3] ॥—गण्डीरः, समष्ठिला, इति २ **गण्डीराख्यशाकभेदस्य** ॥—कलम्ब्यादयः ५ **शाकभेदाः** स्युः, एकैकम्। **कलम्बी, उपोदिका, मूलकम्, हिलमोचिका, वास्तुकम्,** इति ५ ॥—दूर्वा, शतपर्विका, सहस्रवीर्या, भार्गवी, रुहा, अनन्ता, इति ६ **दूर्वायाः** ॥—सा **दूर्वा सिता** शुक्ला चेत् तत्र-गोलोमी, शतवीर्या, गण्डाली, शकुलाक्षका, इति ४ ॥—कुरुविन्दः, मेघनामा, मुस्ता, मुस्तकम्, इति ४ **मुस्तायाः**[11]। मुस्तकं पुंनपुंसकयोः ॥—भद्रमुस्तकः, गुन्द्रा, इति २ **भद्रमुस्तकस्य**[12] ॥—चूडाला, चक्रला, उच्चटा, इति ३ **उच्चटामूलस्य**[13] ॥—वंशः, त्वक्सारः, कर्मारः, त्वचिसारः, तृणध्वजः, शतपर्वा, यवफलः, वेणुः, मस्करः, तेजनः, इति १०[14] **वेणोः** ॥—ये वेणवः अनिलेन कीटादिकृतरन्ध्रगतवायुनोद्धताः स्वनन्ति, ते **कीचकाः**

---

१ कंवडळ. २ मोठी कंवडळ. ३ सूरण. ४ कडू सुरण. ५ कळंबी. ६ थोर मायाळू, वाळीची भाजी. ७ मुळा. ८ हलहंची, चाकवत. ९ चंदनबटुवा. १० दूर्वा. ११ मोथा. १२ नागरमोथा. १३ मोथाभेद, फुरडी. १४ वेणु, वेळू.

ग्रन्थिर्ना पर्वपरुषी गुन्द्रस्तेजनकः शरः ९७२
नडस्तु धमनः पोटगलोऽथो काशमस्त्रियाम् ९७३
इक्षुगन्धा पोटगलः पुंसि भूम्नि तु बल्वजाः ९७४
रसाल इक्षुस्तद्भेदाः पुण्ड्रकान्तारकादयः ९७५
स्याद्वीरणं वीरतरं मूलेऽस्योशीरमस्त्रियाम् ९७६
अभयं नलदं सेव्यममृणालं जलाशयम् ९७७
लामज्जकं लघुलयमवदाहेष्टकापथे ९७८
नडादयस्तृणं गर्मुच्छ्यामाकप्रमुखा अपि ९७९
अस्त्री कुशं कुथो दर्भः पवित्रमथ कत्तृणम् ९८०
पौरसौगन्धिकध्यामदेवजग्धकरौहिषम् ९८१
छत्राऽतिच्छत्रपालघ्नौ मालातृणकभूस्तृणे ९८२
शष्पं बालतृणं घासो यवसं तृणमर्जुनम् ९८३

स्युरिति १ ॥—ग्रन्थिः, पर्व, परुः, इति ३ **वंशादिग्रन्थेः**[1]। ग्रन्थिः पुंसि ॥—गुन्द्रः, तेजनकः, शरः, इति ३ **शरस्य**[2] ॥—नडः, धमनः, पोटगलः, इति ३ **धमनस्य**[3] ॥—इक्षुगन्धा, पोटगलः, बल्वजाः, इति ३ **काशस्य**[4]। तत्र **बल्वजा** इत्येकं पुंलिङ्गं बहुवचनान्तम् ॥—रसालः, इक्षुः, इति २ **इक्षोः**[5] ॥—पुण्ड्रः, कान्तारकः, इति २ **इक्षोर्भेदाः** ॥ वीरणम्, वीरतरम्, इति २ **तृणभेदस्य**[6] ॥—उशीरम्, अभयम्, नलदम्, सेव्यम्, अमृणालम्, जलाशयम्, लामज्जकम्, लघुलयम्, अवदाहम्, इष्टकापथम्, इति १० **वीरणमूलस्य**[7] ॥—**नडादयः** नड-काशादयः, तृणं तृणजातीया इत्यर्थः। ये च **गर्मुच्छ्यामाक**प्रमुखाः[8] ॥ कुशम्, कुथः, दर्भः, पवित्रम्, इति ४ **कुशस्य**[9,10]। तत्र कुशं क्लीब-पुंसोः ॥—कत्तृणम्, पौरम्, सौगन्धिकम्, ध्यामम्, देवजग्धकम्, रौहिषम्, इति ६ **तृणभेदस्य**[11] ॥—छत्रा, अतिछत्रः, पालघ्नः, मालातृणकम्, भूस्तृणम्, इति ५ **वचाकृतेर्जलतृणभेदस्य**[12] ॥—शष्पम्, बालतृणम्, इति २ **कोमलतृणस्य** ॥—घासः, यवसम्, इति २ **गवादीनां भक्ष्यतृणस्य** ॥—तृणम्, अर्जुनम्, इति २ **तृणमात्रस्य**

१ पेर. २ शर. ३ देवनळ. ४ लव्हाळे, लवा. ५ ऊंस. ६ काळा वाळा. ७ वीरणमूळ, (वाळा) ८ तृणभेद. ९ तृणधान्यभेद. १० दर्भ. ११ रोहिस गवत. १२ श्वेतगवत.

तृणानां संहतिस्तृण्या नड्या तु नडसंहतिः ९८४
तृणराजाह्वयस्तालो नालिकेरस्तु लाङ्गली ९८५
घोण्टा तु पूगः क्रमुको गुवाकः खपुरोऽस्य तु ९८६
फलमुद्वेगमेते च हिन्तालसहितास्त्रयः ९८७
खर्जूरः केतकी ताली खर्जूरी च तृणद्रुमाः ९८८

## ६. सिंहादिवर्गः

सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः ९८९
'कण्ठीरवो मृगरिपुर्मृगदृष्टिर्मृगाशनः **
पुण्डरीकः पञ्चनखचित्रकायमृगद्विषः' **
शार्दूलद्वीपिनौ व्याघ्रे तरक्षुस्तु मृगादनः ९९०
वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः ९९१
दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार इत्यपि ९९२
कपिप्लवंगप्लवगशाखामृगवलीमुखाः ९९३

॥—तृणानां संहतिः समूहः **तृण्येत्युच्यते** १ ॥—नडानां संहतिर्**नड्यत्युच्यते** १ ॥ तृणराजः, तालः, इति २ **तालस्य** ॥—नालिकेरः, लाङ्गली, इति २ **नालिकेरस्य**[1] ॥—घोण्टा, पूगः, क्रमुकः, गुवाकः, खपुरः, इति ५ **पूगवृक्षस्य**[2] ॥ अस्य फलं **उद्वेगमित्युच्यते** १ ॥—**हिन्तालस्तालभेदः** ॥—खर्जूरः, केतकी, ताली, खर्जूरी, इति ४ **तृणद्रुमभेदाः**[3] ॥

९८९–१०७४–सिंहः, मृगेन्द्रः, पञ्चास्यः, हर्यक्षः, केसरी, हरिः, इति ६ **सिंहस्य** ॥—शार्दूलः, द्वीपी, व्याघ्रः, इति ३ **व्याघ्रस्य** ॥ तरक्षुः, मृगादनः, इति २ **कुकुराकृतेः कृष्णरेखाचित्रितस्य मृगविशेषस्य** ॥—वराहः, सूकरः, घृष्टिः, कोलः, पोत्री, किरिः, किटिः, दंष्ट्री, घोणी, स्तब्धरोमा, क्रोडः, भूदारः, इति १२ **सूकरस्य** ॥—कपिः, प्लवङ्गः, प्लवगः, शाखामृगः, वलीमुखः,

१ **नारळ**. २ सुपारी. पोफळी. ३ केतकी.

